LX & LXI (1-4) January-December 2004-05



# JOURNAL OF THE GANGANATHA JHA KENDRIYA SANSKRITA VIDYAPEETHA

EDITOR
**GOPARAJU RAMA**




**Rashtriya Sanskrit Samsthan**
(Deemed University)
Ganganath Jha Campus
Chandrashekhar Azad Park
Allahabad
2006

Rashtriya Sanskrit Samsthan (Deemed University) Ganganatha Jha Campus is a constituent Institute of *Rashtriya Sanskrit Sansthan*, Delhi, which is run under the auspices of the Ministry of Human Resources Developments. Govt. of India.

•

गङ्गानाथप्रसृमरयशश्चन्द्रिकाधौतहर्म्यं
कूजद्विद्वद्विहगनिवहानेकगीताभिरामम्।
काले काले कुसुमितनवान्वेषणाऽऽमोदिताशं
विद्यापीठं जयतु जगतां भूयसे मङ्गलाय॥

•

*Annual Subscription*
*Indian : Rs. 80/- Foreign : $ 20/-*
*(including postage and registration charges)*

*Printed at :*
**Prayagraj Computers**
56/13 Motilal Nehru Road, Allahabad-2

# Foreword

It is a pleasure that our Journal entered its 61st issue thus keeping pace with the age of our Vidyapeetha which is 62 years old. It is a matter of surprise that this issue carries a few articles which are bulky. They are bulky but they are equally bulky from the research point of view also. Expert's opinion was availed of. All the articles are from eminent scholars and some young scholars, who form the next generation, also contributed some articles.

I express my gratitude for all of them and wish the composition of this isue is appreciated.

**Goparaju Rama**

# JOURNAL
# OF THE
# RASHTRIYA SANSKRIT SAMSTHAN

**Vol. LX & LXI (1-4)** **January–December 2004-2005**


## CONTENTS

------

# कादिकुले काली

शैलकुमारी मिश्रा, इलाहाबाद

प्राचीनभारतीयवाङ्मयस्य धारा आगमनिगमभेदेन द्विधा प्रवाहिता। निगमस्य अर्थो वेदः आगमस्य च तन्त्रं भवति। आगमशास्त्रमपि वेदा इव भारतीयधर्मसंस्कृतिसभ्यतानां मूलस्रोतः उद्देश्यं पुरुषार्थचतुष्टयसाधनमेव।

यद्यपि तन्त्रशब्देनाप्यभिधीयते आगमः तथापि आगमशब्दस्य सार्वभौमिकता हृदयग्राहिता च अधिका प्रतिभाति। वेदेषु आगमे च ऐक्यनिरूपणायैव कूर्मपुराणे स्वयं कथयति भगवती–

ममैवाज्ञा पराशक्तिर्वेदसंज्ञा पुरातनी।

ऋग्यजुः सामरूपेण सर्गादौ संप्रवर्तते॥

तत्त्ववैशारदीग्रन्थे वाचस्पतिमिश्रेण आगमशब्दस्य व्याख्या एवं कृता–

"आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदय निःश्रेयसोपायाः स आगमः[1]"

कलियुगे आगमोक्तोपासनाया एव प्राधान्यं तस्मादेव श्रीमच्छङ्कराचार्येण उक्तम् यत्–

श्रुत्युक्तस्तु कृतेधर्मस्त्रेतायां स्मृतिसम्भवः।

द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥[2]

सम्प्रदायभेदेनागमस्य प्रमुखानि त्रीणि रूपाणि प्राप्यन्ते शैवशाक्तवैष्णवसम्प्रदायाः, ये च कालक्रमेण पुनः गाणपत्यसौरपाशुपतकापलिक शाबरादिरूपेण अनेकेषु सम्प्रदायेषु विभक्ताः। शक्त्युपासकानां सम्प्रदायः शाक्त इत्यभिधीयते। अस्याखिलसृष्टिप्रपञ्चस्य

---

1. तत्त्ववैशारद्यान् 1.7
2. प्रपञ्चसारे

आधारभूतौ द्वौ मूलस्तम्भौ मायाब्रह्मरूपिणौ। अनयोस्तादात्म्यस्यैवपरिणामोऽयमखिलः संसारः। उक्तमस्ति श्वेताश्वतरश्रुतौ–

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तयो र्विभूतिलेशो वै जगदेतच्चराचरम्॥[1]

शाक्तसम्प्रदायेऽपि दिव्यवीरपशुदक्षिणवामचीनकुलसमयपारानन्दकादिमतहादिमतकहा-दिमतगौडमार्गकेरलमार्ग-कश्मीरमार्गकापालिकदिगम्बरक्षपणकादिभेदेन अनेके मार्गाः सम्प्रदाया वा प्रचलिताः सन्ति। तत्रापि शाक्तसम्प्रदाये उपास्यदेवानामाधारेणापि वर्गीकरणं जातम् अस्मिन् प्रकारे दशमहाविद्यानां नामानि चर्चितानि सन्ति। ताः महाविद्याः–

कालीतारामहाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्याधूमावती तथा।
बगला सिद्धविद्या च मातङ्गी कमलात्मिका।
एता दशमहाविद्याः सिद्धविद्याः प्रकीर्तिताः।[2]

महाकालसंहितानुसारेण अन्यदेवताः विभिन्नयुगेषु अभीष्टं प्रददति किन्तु चतुर्युगेषु अभीष्टसंपादनसामर्थ्यं दशमहाविद्याष्वेव अस्ति। एतासु महाविद्यास्वपि उपासनादृष्ट्या सर्वाधिकमहत्त्वपूर्णा त्रयः शाक्तसम्प्रदायाः सन्ति–कालीताराश्रीविद्याश्च। श्रीविद्या एव षोडसी-त्रिपुरसुन्दरी-त्रिपुरा-ललितानामभिरप्यभिधीयते। एतेषां सम्प्रदायानां पुरा अनेकाः शाखा आसन् किन्तु अद्यत्वे तासु बह्वयः शाखाः लुप्ताः सन्ति। महाशक्तेरनन्तानि रूपाणि नामानि च सन्ति किन्तु तस्याः परमं रूपं एकमभिन्नञ्च। अस्याः मनसाप्यगोचरं परमं रूपं जीवन्मुक्ता साधका एव दृग्गोचरी कर्तुं प्रभवन्ति।

श्रीविद्याया उपासना आप्राचीनकालादेव प्रचलिता अस्ति। इन्द्रादिदेवा अपि समुपासका आसन् अस्याः विद्यायाः। दुर्वासा-अगस्त्य-वसिष्ठ-विश्वामित्रादयो ऋषिगणाः श्रीविद्यायाः प्रमुखाः साधका आसन् आधुनिके युगे श्रीशङ्कराचार्यस्य गुरूणां श्रीगौडपादाचार्याणां नाम

---

1. श्वेताश्वेतरोपनिषदि
2. तन्त्रसारे

विशेषेण गृह्णन्ति विद्वांसः श्रीविद्यासमुपासकेषु। आचार्येणापि देव्याः प्रशस्तौ पद्यमिदं रचितम्–

त्रयाणां देवानां त्रिगुणजनितानां परशिवे।
भवेत् पूजा, पूजा तव चरणयो र्या विरचिता॥[1]

अद्यापि आचार्यशङ्करेण प्रतिष्ठापितेषु चतुर्षु पीठेषु श्रीविद्याया उपासना श्रीचक्रस्य च पूजा भवित। श्री विद्याया विषये शाक्तदर्शने प्रतिपादितमस्ति–

श्री दात्री च सदा विद्या श्री विद्यापरिकीर्तिता।
निर्गुणा च महादेवी षोडशी परिकीर्तिता॥[2]

श्रीविद्या तन्त्रसिद्धा एव न अपितु इयं वेदानुमोदिता अपि। इयं शक्तिचक्रस्य सम्राज्ञी ब्रह्मस्वरूपा आत्मशक्तिरस्ति। ऋग्वेदान्तर्गते शाङ्खायनारण्यके यथा 'तिस्रः पुरः त्रिपक्षः विश्वचर्षिणी यत्र कथापरा सन्निविष्टा अधिष्ठायैनामजरा पुराणिः महिमा देवतानाम्। कामो योनिः कमला वज्रपाणिः।[3]

श्रीविद्याया एव भेदाः 'कादिं' विद्या 'हादि' विद्या 'कहादि' विद्याश्च। कादिविद्योपासकानां देवी काली हादिविद्योपासकानां त्रिपुरसुन्दरी कहादिविद्योपासकानाञ्च देवी तारा नील सरस्वती वा। गौडीयानां मते कादि मतं सर्वश्रेष्ठं किन्तु कश्मीरकेरलयोश्च मते त्रिपुरा तारा वा सर्वप्रधाना। कादिविद्या गायत्र्याः अतिगुप्तं रूपम्। इदं गुप्तं तत्त्वं वेदेषु व्याप्ता अस्ति। यतो हि गायत्री वेदसारभूता अस्ति। अतीव गोपनीयेयं विद्या। अस्यां कूटत्रयं भवति वाग्भवकूटः कामराज कूटः शक्तिकूटश्च। वाग्भवकूटे वर्णानां संख्या अष्टादश कामराजकूटे द्वाविंशति शक्तिकूटे च अष्टादश एव वर्णाः सन्ति। एतेषां वर्णानां योगो भवति अष्टपञ्चाशत्। शाक्तग्रन्थेषु वर्णानां मात्रासंख्याविचारोऽपि कृतोऽस्ति। वाग्भवकूटे वर्णसमूहः प्रलयाग्निरिव देदीप्यमानः मूलाधारात् अनाहतं यावत् व्याप्य तिष्ठति। कामराज कूटे वर्णाः कोटिसूर्यसदृशाः सन्ति ये अनाहतचक्रात् आज्ञाचक्रं यावत् व्याप्ताः। शक्तिकूटस्थाः वर्णा कोटिचन्द्रसदृशाः शीतरश्मियुक्ताः आज्ञाचक्रात् ललाटपर्यन्तं सन्ति

1. सौन्दर्यलहर्याम्
2 शाक्तदर्शने 8.225
3. तान्त्रिकसाहित्ये, पृ० 31

व्याप्ताः। एते वर्णाः मालायां गुम्फितरत्नानाम् इव एकस्योपरि एक इति क्रमेण विराजमानाः तिष्ठन्ति।

व्यष्टिरूपेण त्रयः कूटाः समष्टौ एकःकूटः आहत्य चत्वारः कूटाः भवन्ति। एतेषां चत्वारि बीजानि सन्ति यानि सृष्टिस्थितिसंहारानाख्यानि च कथ्यन्ते। अनाख्या औदासिन्या-वस्था इति।

कादिविद्यायाः प्रमुखोपासकः प्रर्वतकश्च कामदेवः। अयं कादिविद्याप्रवर्तकत्वात् विद्येश्वरः। शाक्तग्रन्थेषु एतादृशानां द्वादशविद्येश्वराणां नामानि गृहीतानि सन्ति ते मनुचन्द्रकुबेरागस्त्याग्निसूर्येन्द्रस्कन्दशिवंलोपामुद्रादुर्वासादयः। दुर्वाससः अपरमपि नाम विद्यते क्रोधभट्टारकः एतेषां विद्येश्वराणां अनेके सम्प्रदायाः इदानीं लुप्तप्रायाः सन्ति। कामराजस्य लोपामुद्रायाश्च सम्प्रदाययोरेव केचनांशाः उपलब्धाः सन्ति। कामेश्वरस्याङ्कस्थायाः कामेश्वरर्याः पूजायां द्वयोः (कादिहादिविद्ययोः) उपयोगो भवति।

श्रीविद्यार्णवतन्त्रस्यानुसारं कादिमतस्यैव अपरं नाम मधुमतीमतम्। श्री विद्यार्णवग्रन्थे अस्यप्रसंगस्यविस्तृता चर्चा वर्तते। अस्यैवग्रन्थानुसारेण कादिमतस्य प्रमुखाः चत्वारो ग्रन्थाः तन्त्रराजः मातृकार्णवः योगिनीहृदयं त्रिपुरार्णवश्च। त्रिपुरोपनिषत् भावनोपषित् चापि ग्रन्थौ महत्त्वपूर्णौ स्तः कादिमतस्य। हादिविद्यायाः उपासिका प्रवर्तिका च लोपामुद्रा आसीत्। हादिविद्याया उपासकेषु दुर्वासा अपि प्रमुखः। सः त्रयोदशाक्षरहादिविद्यायाः उपासना करोतिस्म।

कादिहादिकहादिविद्यानां उपासनापद्धत्यां नास्ति कश्चन महान् भेदः नाम्नि एव भेदः। सम्मोहनतन्त्रस्य पञ्चमपटले लिखितमस्ति यत् कादिहादिविद्ययो र्भेदद्वयमस्ति प्रत्येकं भेदे नवाम्नायानि सन्ति। कादिमतं 'वीरादनुत्तरं' कथ्यते यस्य अधिष्ठात्री देवी काली। हादि मतं 'हंसराज' इति क़थ्यते यस्य अधिष्ठात्री देवी त्रिपुरसुन्दरी अस्ति। द्वयो र्विद्ययोः समन्वितं मतं कहादिमतं यस्याधिष्ठात्री 'हंसतारा' देवी अस्ति या नीलसरस्वतीरूपेणापि अभिधीयते। तान्त्रिकग्रन्थेषु लिखितमस्ति यत् 'हंसतारा महाविद्या सार्वभौमिकादेवी। इयं सर्वेषु सम्प्रदायेषु विभिन्ननामभिः उपास्या। जैनाः पद्मावती इति कथयन्ति बौद्धाश्च तारारूपेणोपासन्ते। चीन तंत्रानुयायिनः महोग्रा, कौलाः चक्रेश्वरी इति। कादिमतानुयायिनः काली, हादि विद्योपासकाः त्रिपुरसुन्दरी कहादिसमुपासका 'हंस' रूपेण च साधनां कुर्वन्ति।

ब्रह्माण्डपुराणानुसारेण श्रीविद्योपासनायाः सम्पूर्णे भारतवर्षे प्रमुखाणि त्रीणि स्थलानि सन्ति मेरुशिखरे कामगिरिः जालन्धरः पूर्णगिरिश्च। रुद्रयामलस्योत्तरतन्त्रे प्राचीनभारतस्य तेशां राज्यानां नामानि उल्लिखितानि सन्ति येषु कादिमतस्योपासना प्रचलिता आसीत् तेषु अङ्ग-बङ्गकलिङ्गकामरूप-मालव काम्बोजादीनि प्रमुखानि सन्ति।[1] अत्र अद्यापि कादि-विद्यायाः अधिष्ठातृदेव्याः पूजा प्राधान्येन भवति।

महाविद्याक्रमे सर्वप्रथमं काल्याः गणना भवति। इयं महाकालनियन्त्रृत्वात् कालीतिनाम्ना प्रसिद्धा। इयं काली साधकेभ्यः तत्त्वज्ञानं प्रददाति। दशमहाविद्यासु कालीमहाविद्योपासना सर्वाधिका प्रचलिता अस्ति। नामभेदेन मूर्तिभेदेन च कालीबहुविधा-सिद्धकाली, महाकाली गुह्यकाली दक्षिणा काली कामकलाकाली भद्रकाली श्मशानकाली रक्षाकाली च। अन्येऽपि भेदाः भैरवतन्त्रे उल्लिखिताः। आसाम् उपासनापद्धत्यां स्थानभेदेन भेदोऽपि वर्तते। दक्षिणाकाल्याः पूजा गृहस्थानां कृते प्रशस्ता उक्ता। स्वयं महाकालस्वरूपे महादेवेनापि अस्या देव्याः पूजा कृता। बङ्गक्षेत्रे अद्यापि काल्याः मूर्त्ते एव पूजा प्रचलति। महान् साधकों रामकृष्णपरमहंसेनापि अस्य रूपस्यैव साधना कृता। गुह्यकाल्या उपासना नेपालक्षेत्रे प्रसिद्धा। गुह्यकाल्याः प्रमुखोपासकाः ब्रह्मवसिष्ठश्रीरामकुबेरयमरावणेन्द्रादयः आसन्। एवं कामकलाकाल्युपासकाः इन्द्रवरुणविवस्वद्विष्ण्वादयो देवा आसन्। कालीसाधनाविषये कालीतन्त्रे दक्षिणाकाल्याः स्वरूपवर्णनमेवं कृतमस्ति करालवदना, मुक्तकेशी, दिगम्बरा, मुण्डमालाविभूषिता, चतुर्हस्ता च। यस्याः वामहस्ते सद्यश्छिन्नमस्तकमूर्ध्ववामहस्ते खड्गं निम्नवाम-हस्ते वरमुद्रा ऊर्ध्व दक्षिणहस्ते च अभयमुद्राधृता इयं महामेघवत्श्यामला स्मेरानना शवरूपमहादेवोपरि स्थिता अष्टम्याश्चन्द्रतुल्या शवकरनिर्मितकाञ्चीधारिणी ओष्ठप्रान्तेरक्त-धारास्राविणी घोरद्रंष्ट्रा मुण्डमालाधारिणी च। महाकाल्या स्वरूपस्य दार्शनिकमपि रहस्यमस्ति। यथा देव्या वामहस्ते यच् छिन्नमस्तकं तन् महामोहस्य प्रतीकम्। एवं सर्वेषाम-लङ्काराणामायुधानञ्च रहस्योल्लेखः प्राप्यते तन्त्रग्रन्थेषु।

कालीतत्त्वस्यविषये केचन् उत्कृष्टग्रन्थाः-महाकालसंहिता कालीयामलं कालीकल्पः कालीतन्त्र कामेश्वरीतन्त्रं कालिकार्णवादयश्च सन्ति।

---

1. रुद्रयामले उ० स० 37

सर्वा महाविद्याः समानरूपेण अभीष्टप्रदानेन साधकानां कल्याणं कुर्वन्ति। उपासना-पद्धतिकुलपरम्परा सम्प्रदायभेदेन यद्यपि विभिन्नरूपेषु विभिन्ननामभिरियं ज्ञायते तथापि वस्तुतः महत्त्वविषये आसां न कोऽपि भेदः। साधकैः भेदबुद्धिं विहाय स्वरुच्यनुसारं भक्त्यनुसारं कुलपरम्परानुसारं च कापि महाविद्या समाश्रृत्य साधना कर्तव्या। इयं तन्त्रशास्त्रेषु बहुधा निर्दिष्टम्–

यथा काली तथा तारा तथा नीलसरस्वती।
सर्वाभीष्टफलप्रदा तथा त्रिपुरसुन्दरी॥
अभेदमतमास्थाय यः कश्चित् साधयेन्नरः।
त्रिलोके स तु संपूज्यः स्यात् तारासूत एव सः॥

श्वेताश्वेततरोपनिषदपि कथयति–

यो हि महामायां ब्रह्मशक्तिं वेत्ति स मृत्युं तरति पापमुक्तो भवति अमृतत्वमश्नुते। अन्ते च श्रीमच्छङ्कराचार्यस्य अनेन श्लोकेन लेखोऽयं पूर्णतां लभते।

अंव्यक्तानाम्नि परमेशशक्तिः, अनाद्यविद्या त्रिगुणात्मिका परा।
कार्यानुमेया सुधियैव मायया यया जगत् सर्वमिदं प्रसूयते॥[1]



1. विवेकचूडामणी, 110

# भर्तृहरि निर्वेदकारः हरिहरः

डॉ० नरेन्द्र प्रसाद शुक्लः, बिलासपुरम् ( छत्तीसगढ़ )

''भर्तृहरिनिर्वेदनाटकम्'' शान्तरसप्रधानं नाटकमस्ति। सप्तदशतमे शताब्द्यां विद्यमानेंन महामहोपाध्यायेन हरिहरेण प्रणीतमस्ति एतन्नाटकम्। यद्यपि भर्तृहरिनिर्वेदनाम्ना एव परमदार्शनिकेन भवानीदत्तोपाध्यायेन प्रणीतापराप्येका रचना प्राप्यते सम्प्रति। परमधुनापि नेयं प्रकाशिता। उभयोर्नाटकयोः शान्तरसस्य प्राधान्यं विद्यते। द्वयोःनाटकयोः मुख्योद्देश्यं वर्तते योगिना गोरखनाथेन भर्तृहरेः कृते वैराग्यप्रापणम्। परमनयोः नाटकयोः कथावस्तु सर्वथाभिन्नतां भजते। एकस्मिन्नाटके भर्तृहरिः स्वाभार्यां भानुमतीं परीक्षते यया तस्याः प्राणवियोगश्च जातः। ततः गुरुःगोरखनाथः स्वीयं मृण्मयभाण्डभग्नतां नाटयन्नागच्छति राज्ञा सह करोति वार्तालापं च। प्रचलितेऽस्मिन् वार्ताक्रमे राजनि योगिनः वार्तां श्रुत्वा वैराग्यं जायते। तत्रैवापरिस्मिन् नाटके मृगयार्थं गते सति राजा एकस्मिन् वृक्षस्याधः गोरखनाथं पश्यति। राज्ञा यः मृगः हन्यते स्म। रक्तरञ्जितः सन् योगिनः अङ्कमागत्य मृतः जातः। राजा मृतं मृगमभिलषति। परं योगी राज्ञा प्राणयुक्तं कारयितुं वाञ्छति। प्राणयुक्तं कर्त्तुं सर्वथाऽसम्भवोऽस्ति पुनः किमर्थं त्वया हतः। नृपोऽस्म्यहम्। यः जीवनं दातुमसमर्थः तस्य कृते वयस्याप्याधिकारो नास्ति। एवं क्रमेण बहुविधं उभयोर्मध्ये वार्ता जाताः। यदा पणानुसारेण भोगी मृतमपिमृगं सजीवं करोति तदैव राजा वैराग्यं स्वीकरोति। राजा हन्तुमेव शक्नोति परं योगी हनने जीवनदानेऽपि समर्थो भवति।....अलख निरञ्जन।''

एव सति वैषम्येऽपि द्वयोः नाटकयोः किञ्चित् साम्यमपि विद्यते। यथा द्वयोः पञ्च-पञ्च अङ्कानि सन्ति। पञ्च षट् पात्राणां सामञ्जस्यम् स्त्रीपात्राणां न्यूनतादयश्च। वैषम्यं यथा- मूलकथावस्तुनि भेदः, एकस्मिन्नाटके यथार्थमृगयावर्णनमपरेऽस्मिन् मृगयाडम्बरश्च। भवतु नाम। सम्प्रति स्वप्रकृतविषयमनुसरामि यत् भर्तृहरिनिर्वेदकारः कः? कति तस्य कृतयः?

भर्तृहरिनिर्वेदस्य प्रकाशनमनेकधा विविधस्थानात् जातमस्ति। तेषु मुम्बईस्थ निर्णयसागरप्रेसतः त्रीणि संस्करणानि प्रकाशितानि सन्ति। चौखम्बा संस्कृत सीरिज कार्यालयादेकमेव। राजकुमार छत्रपति सिंह जू देवेनाऽपि 1912 तमे ख्रिस्ताब्दे हनुमन्त प्रसादप्स्यैकं संस्करणं प्रकाशितमासीत्। अपिच योगप्रचारिणीसभया चन्दनाथयोगी विशारदस्य सम्पादनेऽस्य व्याख्याद्वयसहितं प्रकाशनमभवत्। हिन्दी उत्कलीय तेलगू आङ्गलभाषासु सम्प्रति चतुर्दश व्याख्याः नाटकस्यास्योपलभ्यन्ते। एतासु प्रायसः सर्वाः प्रकाशिताः सन्ति।

अत्रान्तरे 1998 तमे ख्रिस्ताब्दे नवदिल्लीतः नागपाब्लिसर्स प्रतिष्ठानादप्यस्य नूतनया व्याख्यया सह प्रकाशनमभूत्। विद्योतिनी नाम्नाया अस्या व्याख्याकारोऽस्ति मनोज झा। अस्य संस्करणस्य भूमिकायां केचित् भ्रामकं तत्त्वं प्रदाय झा महोदयःस्य निर्वेदकारस्य परिचयं नितान्तं विवादास्पदं कृतवन्तः। अतोऽधुनाऽहमेतेषु विषयेषु विचारान् नाटककारस्य मूलभूतपरिचयं प्रस्तोतुं प्रयत्नं विधास्यामि।

स्वभूमिकायां झा महोदयेन द्वयोः हरिहरयोः परिचयः दत्तः। ययोः एकः नाटककारः हरिहरः अपरश्च सुभाषितकारः हरिहरः। अस्य मतानुसारं सुभाषितकारः हरिहर (1550-1630) मध्ये कंरमहावेहटनामके वंशेऽजायत। अस्य पितुः नाम राघवोपाध्यायः आसीत्। निवासश्च मधुबनीजनपदस्य सरिसवपाही इत्यस्य पार्श्वे स्थितः बिट्ठोनामकः ग्रामः। नीलकण्ठः अस्यैव हरिहरस्य भ्रातः आसीत्। एवञ्च सुभाषितकारस्य हरिहरस्यापरा कृतिः प्रभावती परिणयोऽस्ति। या चौखम्बा वाराणसीतः प्रकाशिता विद्यते। अनेनैव साकं नाटककारः हरिहरः अस्य मते बलियासवंशीयस्य म० म० जयधरस्य पुत्र आसीत्। अस्य समयोऽयम् (1350-1425) ख्रिस्ताब्दे मध्ये स्थिरीकृतवान्।

सत्यमिदं यत् भर्तृहरि निर्वेदे नाटककारः हरिहरः स्वपरिचयं नैव दत्तवान्। अतो तस्य परिचयः बाह्यप्रमाणमधिकृत्य निर्धारितव्यः। यथा–1. अड्यारस्य, तंजाउरस्य, पूनायाः बड़ोदरायाश्च मातृकागारेषु एकः व्याख्याग्रन्थः प्राप्यते मुक्तावली अधिकरणकौमुद्याः व्याख्या। अस्याः लेखकोऽपि हरिहर एवास्ति। अस्याः 'आदौ मङ्गलात्मकं पद्यद्वयं

उद्धृतमस्ति। यथा–

शैव्यायादृत्यमूर्ध्ना रजनिकर-कला जाह्नवी चोपनीता,
यत्राङ्गो तापभीता पदमपि न जटाजूटतोऽधः प्रपेदे।
प्राणान् हातुं निपीतं विषमपि हृदयं नाविशद् दाहभीत्या,
शम्भो सत्यावियोगं तमपि शमितवत्यस्तु शान्तिः शिवाय॥

तथा–

ध्यानावधानपरिलङ्घनजागरूकरोषानलोन्मथितमन्मथ विग्रहस्य।
सद्यः प्रवृद्ध करुणा परिणाहदीर्घं, देवास्य पातु परिदेवितमिन्दुमौलेः॥

1. अनयोः द्वयोः पद्ययोः क्रमशः एकं एकं पद्यं भर्तृहरिनिर्वेदप्रभावतीपरिणये च प्राप्येते। अतःसिद्ध्यति त्रयाणामपि ग्रन्थानां कर्त्ता एकः हरिहर एवास्ति, न एतेषु वैभिन्यम्।

2. उपर्युक्ताया: मुक्तावलीव्याख्यायाः अन्ते लेखकः पद्यद्वयेन स्वपरिचयं प्रस्तौति यथा–

प्रादुर्भूय पुरो गिरेरिव हृषीकेशात्कृतीराघवो
यस्तिग्मद्युतिवद्दिवाकरमहाकाशे दिदीपे द्विजः।
या लक्ष्मीरिव मैथिलादुदभवद्विद्याऽवदातात्मनः,
तस्यामुद्भवमापतुः कुशलवप्रख्यातगोत्रौ सुतौ॥

एषा तयोः प्रथमजेन निजानुजात श्रीनीलकण्ठकविकण्ठ विभूषणाय।
गोविन्द सूनुगुणगुम्फनिषक्तसूक्तिर्मुक्तावली हरिहरेण चिरेण चीर्णा॥

पद्यद्वयमिदं प्रभावतीपरिणयेऽपि प्राप्नोति। एतदर्थमयं सिद्ध्यति यत् भर्तृहरिनिर्वेदकारस्य स एव परिचयः स्यात् यत् मुक्तावल्याः व्याख्याकारस्य प्रभावती परिणयकारस्य च विद्यते। यतो हि त्रयाणां ग्रन्थानां कर्त्ता एक एव हरिहरोऽस्ति। एवम् पूर्वमुक्तम्।

3. 'निर्णयसागर प्रेस' मुम्बईतः काव्यमालायां 1914 तमे खिस्ताब्दे प्रकाशितायां सुभाषितावल्यां हरिहरसुभाषितस्य वा पुष्पिकायां पद्यमेकमुद्धृतमस्ति–

लक्ष्मीराघवयोः सूनो सूनोऽयमङ्गिराङ्गुणैः।

सुभाषितां संक्षेपः प्रेक्षावृद्धिः परीक्ष्यताम्॥

अनेनेदं ज्ञायते यत् मुक्तावलीकारः हरिहरः यस्य पितरौ लक्ष्मीराघवौ आस्ताम् सुभाषितकारस्यापि पितरौ तावेव स्तः, अतो सुभाषितकारः हरिहरः मुक्तावली प्रभावतीपरिणयदीनां रचयितुः हरिहरादभिन्नः, नात्र संशीतिलेशः।

4. अलंकार समुद्गः रसमार्तण्डः मीमांसारसपल्वलादीनां रचयिता इन्द्रपति उपाध्यायोऽस्ति। अयं जनः अलंकार समुद्गे हरिहर सुभाषितस्य पद्यान् एवञ्च रसमार्तण्डे भर्तृहरिनिर्वेदस्य पद्यमेकं 'यथाऽस्मत्पितामहमातृचरणाः' इति उक्त्वा उद्धृतवान्। अनेन सिद्ध्यति यत् इन्द्रपतिः तस्यैव हरिहरस्य भ्रातुःपौत्र आसीत् यः हरिहरसुभाषितं-भर्तृहरिनिर्वेदञ्च अरचयत्।

5. मीमांसारसपल्वलस्य भूमिकायां सम्पादकः लिखति यत् इन्द्रपतिरयं मैथिलश्रोत्रिय भूसुरवंशविशेषस्य कर्महाबेहट कुलम्लस्यावतंसः वत्सगोत्रीयः सूक्तिमुक्तावल्यादिविविध काव्यग्रन्थ प्रणेतुर्महामहोपाध्यायस्य हरिहस्य भ्रातुः ज्योतिर्विदो नीलकण्ठस्य पौत्रः ज्योतिर्विदः रुचिपतेः पुत्र आसीदिति।' (मीमांसारस पल्वल अवतरणम् पृ० 1 गंगानाथ झा केन्द्रीय सं० विद्यापीठम्, इलाहाबाद 1977 ई०)

अर्थात् इन्द्रपत्युः पितामहः म० म० नीलकण्ठ उपाध्यायः सूक्तिमुक्तावलीकारस्य हरिहरस्य भ्राता आसीत्। स्वयं हरिहरोऽपि कथयति–प्रादुर्भूय....चिरेण चीर्णा।' इति (पूर्वमुद्धृतम्)

नीलकण्ठोऽपि स्वपरिचयं ददन् मध्यमग्रहसिद्धौ किञ्चित् एवमेव लिखति–

हरिचरणपरा सदा विलक्ष्या द्विजकुलभूषण राघवात्सुतो यः।

हरिहरकविपण्डिताधिराजाऽवरज इमां स चकार नीलकण्ठः॥

अनेन प्रमाणीक्रियते यत् हरिहरः नीलकण्ठश्च उभौ भ्रातरौ आस्ताम्। तथा च इन्द्रपतिः हरिहरस्य भ्रातुःपौत्रः आसीत्।

6. इन्द्रपत्युः समयः सप्तदशखृष्टशताब्दयाः अन्तिमो चरणः निर्णीतः वर्तते। यतो हि अयं स्वीयेऽलंकारसमुद्गे मिथिलेशस्य विष्णुसिंहस्योल्लेखं कृतवान्।

नन्दीपतेरपरवादरिनामकस्य, सम्मानितस्य मिथिलाधिपविष्णुसिंहैः।

भाषा कवेर्मनसितोषसुबुद्धि हेतोः एनं निबन्धमयमिन्द्रपतिस्तनोति॥

विष्णुसिंहस्य समयः ऐतिहासिकैः (1738-1745 ई०) इति स्वीकृतः तथा च स्वयमिन्द्रपतिरपि स्वकीये मीमांसारसपल्वले कथयति–''महामहोपाध्याय इन्द्रपतिना कृतं मीमांसारसपल्वलं समाप्तम्। शाके 1667 मार्ग शुक्ल पञ्चदश्यां रवौ।'' (1667 शाके = 1746 ई०)

7. इन्द्रपतिः नीलकण्ठस्य पौत्रोऽस्ति। अत्रास्मिन्न केवलं मीमांसा रसपल्वलस्य भूमिका एव प्रमाणमपितु मिथिलाया पंजीव्यवस्थाऽपि प्रमाणीकरोति। न एतावदेव यतोहि इन्द्रपत्युः पिता रुचिपतिः आसीत्। अस्या प्रमाणं तस्य मीमांसारसपल्वलमस्त्येव। यस्मिन्नयं लिखति–

यं लेभे रुक्मिणी देवी सुरेरुचिपतेस्सुतम्।

स तनोति शिवं नत्वा मीमांसारसपल्वलम्॥

रुचिपतिरपि स्वीये सारावली नाम्नि पुस्तके लिखति–

आसीच्छ्रीवत्सगोत्रो द्विजवरतिलको नीलकण्ठाभिधानः।

बेहटेकर्महाख्ये त्रिपुरपदयुगाराधकानामभीष्टः॥

तज्जज्योतिर्विदो वै सुबुध रुचिपतिः माधवी देविजन्मा,

विट्ठोस्थेतीरमुक्तौ रचयति ननु सारावलीयं सुबोधाम्॥

अनेन सिद्ध्यति यत् कर्महाबेहटवंशीयस्य वत्सगोत्रीयस्य नीलकण्ठस्य पौत्रोऽस्ति इन्द्रपतिः। नीलकण्ठश्च हरिहरस्य भ्राता आसीत् एवं तु पूर्वं कथितमेवास्ति। अतो समीचीनमेव लिखति इन्द्रपतिः ''यथाऽस्मत्पितामहभातृचरणाः।''

8. इन्द्रपतिना चर्चितः एवं तस्य पितामहस्य भ्रातरि सति भर्तृहरिनिर्वेदकारस्य समयः (16वीं 17वीं) शताब्द्या मध्यभागमेव स्थिरीकर्त्तुं शक्यते। न कदापि तत्पूर्वम्। एतैः उद्धरणैः साक्ष्यैश्चायं निर्विवादं सिद्ध्यति यत् भर्तृहरिनिर्वेदकारः हरिहरः स एव आसीत् यः सुभाषितावलीं रचितवान्। यः प्रभावतीपरिणयमरचयत्। यस्य च मुक्तावली टीका विद्यते। सहैवायं स एव हरिहरः यस्य वंशः करमहा, गोत्रः वत्सः, भ्राता नीलकण्ठः, पिता राघवः, माता लक्ष्मी, पितामह हृषीकेशः आसीत्। यस्य भ्रातु पौत्रः इन्द्रपतिः अभूत्। इति शम्।



# अपरगीतगोविन्दकारः श्रीजयदेवः

डॉ० प्रमोदरंजन मुखोपाध्यायः, कोलकाता

संस्कृतनाट्यसाहित्ये मणिको नाम महाकविः किमपि मानार्हं पदमधिकरोति। राजवर्द्धनापरनामकस्य दिवाकरस्याऽऽत्मजोऽयं मणिकः माणिको वा मणिकवर्द्धननाम्नाऽपि स्मर्यते। केचिच्चामुम् मिथिलायाम् मानू इत्यपि वदन्ति—इति तत्रत्येन पंजीप्रबन्धेन अपि प्रतीयते। भैरवानन्दाभिधेयं नाटकमस्यामरकृतित्वेन प्रथितं संस्कृतवाङ्मयस्य ललामभूतं रत्नम्। एतन्नाटकपर्यालोचनेन काठमाण्डुस्थराजगन्धागारस्थितपाण्डुलिपिसंग्रहाच्च एतदपि सुविदितं भवति यदस्य महाकवेरपरमपि नाटकं विद्यते राघवानन्दाख्यमिति। अस्यैव महाकवेः माणिकनामधेयस्य विपश्चितस्तनुजः मिथिलादेशवास्तव्यः वत्सगोत्रावतंसोऽयं जयदेव नामा कविः। तत्र तदीयं काव्यमेव प्रमाणम्। काव्यस्यास्य पुष्पिकायां यथोच्यते। कविना—

"श्रीमद्विदेहनृपदेशविशेषवासो
निःशेषभूमिपतिमण्डलमाननीयः।
एतच्चकार वरवीररसप्रधानं
काव्यं कविप्रकरमौलिविभूषणं सत्॥"

मध्येऽपि एकं गीतं द्वितीये सर्गे विद्यते, यत्रायं कविः कथयति— "जयति विदेहनगरमनुरूपम्॥ दिशिदिशि राजमानचामीकररचितविविधमणियूपम्॥ श्रीजयदेवकवेरुदितं मिथिलापुरगीतमशोकम्। मंगलमोदभरेण करोतु सदा मुदितं जनलोकम्॥ इति।

जयदेवस्यास्य प्रसंगे एका रचना कु० भवानी टी० गाँवकरमहोदयायाः विद्यते, तत्र स्पष्टतया कथ्यते "जयदेवोऽयं कविदिवाकरस्य पौत्रः मणिकनामेधयस्य कवेः पुत्रश्चासीत्। यथाऽनेनं कामकेलिकलेति नामके कामशास्त्रीये ग्रन्थे लिखितमस्ति। यथा—"इतिश्री

मैथिलपण्डितमणिमणिवर्द्धनात्मजेन सकलकलाविशारदेन जयदेवकविना कृतं कामकेलिकलायां रतिसोपानम्।'' एवं चान्यत्रापि लिखितं वर्तते, यथा–''इत पण्डितमणिमाणिक्य-माणिक्यात्मजेन रचितं कामकेलिकलायां मन्मथसोपानम्।'' उद्धरणेऽस्मिन् यद्यपि मणिकस्यैव (मणिवर्द्धनस्यैव वा) उल्लेखोऽस्ति, किन्तु स्वयं माणिक्येन (माणिकेन) राघवानन्दे नाटके यद्गदितं तदवलोकनीयम्। यथा–

''तस्याभूत्तनुजः दिवाकर इति ख्यातः परं शाब्दिकः।
तस्माच्छ्रीमणिवर्द्धनोऽजनि सदानन्दप्रदो भूतले॥'' इति

(गैर्वाणी–सं० त्रै० 40/7, हैदराबाद : 2000 ई०)

कविरेष नेपालराज्यस्य जयस्थितिमल्लसूनोः राज्ञः धर्ममल्लस्य सभापण्डितः आसीत्। नेपालरजाकीयेतिहासेन ''मेडिएवल नेपाल'' इत्याङ्ग्लग्रन्थेन च धर्म्मल्लस्य समयः 1375 मिते ख्रीस्तीयेऽवसीयते। तदस्य कवेरपि स्थितिकालः क्रैस्तचतुर्दशशतकमित एवेति गम्यते। कविरयमतीव प्रतिभाशाली आसीदिति सुभाषितग्रन्थेषु संकलितैस्तद्रचितैस्तन्नाम्ना चोट्टङ्कितैः पद्यैः समीचीनतया प्रतीयते।

अस्य जयदेवस्य रचनात्वेन चत्वारीणि काव्यानि प्रसिद्धानि, तत्राऽलंकारशतकं-कामकेलिकला-त्रिपुरसुन्दरीस्तोत्रम्-रामगीतगोविन्दमित्याख्यानि। एष्वलंकारशकतमिति। चन्द्रालोक इवालंकारशास्त्रीयं वा काव्यं वा न जाने तस्यानुपलब्धत्वात्। त्रिपुरसुन्दरीस्तोत्रादस्य साहित्यधुरन्धरत्वं कवित्वकलाप्रावीण्यं च प्रतीयते। एतच्च स्तोत्रं स्रग्धरावृत्तालंकृतं भगवत्या त्रिपुरसुन्दर्याः जयदेवस्य कुलदेवतायाः स्तवनरूपं विद्यते। अन्ते च शिव-विष्णु-गणपति-दुर्गादित्यन्यविषयाणि स्तोत्राण्यपि एषां सुललितलेखनीलताप्रसूतानि विलसन्ति। स्तोत्रेऽस्मिन् भावभाषायुगलमतीव सौन्दर्योल्लासितम्, माधुर्यरससम्प्लुतं च। कवेरस्य ''कामकेलिकला'' ग्रन्थः यस्योल्लेखः ''गैर्वाणी'' पत्रिकायां कृतवती सः लेखः, मया न दृष्टः। परन्तु तस्य चर्चा जयदेवकृतित्वेनेव बहुत्र विद्यते, नात्र काचिद्विप्रतिपत्तिः। द्वितीयं च कारणं लेखिकया कामकेलिकलाग्रन्थतः यत्पद्यमुद्धृतम् पुष्पिकायाः, तदपि समानमेव भवति रामगीतगोविन्दपद्यात्। तद्यथा–

''श्रीमद्‌विदेहनृपदेशविशेषवासी
निश्शेषभूमिपतिमण्डलमाननीयः।
एतच्चकार कलकेलिरसप्रधानं
काव्यं किशोरमकरध्वजभूषणं सत्॥

यद्यपि बाल्यावस्थायामयं कालिदास-बाणादय इव मन्दमतिस्तथापि प्रौढ़ावस्थायां सरस्वतीप्रदत्तवरप्रसादादतीव प्रगल्भः जयदेवसदृश च कविः संजातः।

जानन्ति तत्र सर्वे संस्कृतसम्पोषकाः संस्कृतज्ञाश्च भारतीयाऽभारतीयाः विकासः, यत् संस्कृतसाहित्ये गीतिचर्चितरचनाप्रणाल्याः सर्वप्रथमप्रवर्त्तकः गीतगोविन्दकारजयदेव एव। किन्दुबिल्वनाम ग्राममधिवसता श्रीजयदेवेनैवास्याःअभिनवरचनाप्रणाल्याः सूत्रपातो व्यधायि। बंगदेशवास्तव्यभोजदेवरमादेवीतनुजजन्मा कविवर श्रीजयदेवविरचितं गीतगोविन्दं नाम सुललितं गीतिकाव्यमधुनापि समग्रे भारते महता समारम्भेण जेगीयते रसिकैः। तदनु तत्सरणिमनुसृत्य गीतगौरीपति-गीतगोपीपति-गीतगोपीश्वर-गीतदिगम्बर-गीतवर्णपति-गीतगंगाधर-गीतशंकरप्रभृतीन्यनेकानि गीतिकाव्यानि प्रादुर्भूतानि। अस्यामेव गेयकाव्य-परम्परयां जयदेवेनापरेण कविना ''रामगीतगोविन्द'' मिति सुललितं सरसं चैकमपरं गीतिकाव्यं विरचितम्। नास्त्यत्र कोऽपि सन्देहः यद्रामगीतगोविन्दं नाम गीतकाव्यम-स्याद्‌भुतचमत्कृतिपूर्णा कृतिरिति। गीतगोविन्दमिव अस्मिन्नपि काव्ये भावानुभूतेरभिव्यंजना सुतरामाविष्कृताऽवधार्यते। प्रलम्बसमस्तपदप्रयोगप्राचुर्येऽपि न काव्यमिदं स्वकीयां रमणीयतां विजहाति, प्रवाहयति चानवच्छिन्नां वाग्विलासोल्लासधाराम्। तद्यथा-गुर्जरीरागरूपकतालाभ्यां गीयते-

''विहरति हरिरिह सरयूकूले।
पद्‌मरागचामीकरमरकत-
बद्धविविधतरकूले॥ ध्रु०॥
सादरमज्जदमितयुवतीकुच-
कुंकुमपिंगलनीरे।
शमदमादिसाधनविवेकवश-
मुनिजनसंकुलतीरे॥.....''

आशावरीरागेन रूपकतालेन च रामो जानकीं प्रत्याह–

"चित्रकूटमवलोक्य सीते
उन्नतशिखरलिखितघनमण्डल
मंगलकरण विनीते॥...."

अपि च

"वालितनयसुग्रीववायुसुत नलनीलादिविचारम्।
शंखभुजगतिमिमकरचक्रकुलसंकुलमति विस्तारम्॥"

गीतिकाव्यमेतत्षट्सर्गप्रणिबद्धं चतुर्विंशतिगीतसम्वलितं चास्ति, यत्र मालव–वसन्त–आसवारी–देशराग–गुर्जरी–रामकरी–देशाख्य–देशवराडी–भैरवीति रागेषु पंचदशसमागतेषु च वृत्तेषु द्विशतोत्तरसप्तषष्ठिपद्यानि (195–72) विद्यन्ते। प्रथम गीतं विहाय सकलेष्वन्येषु गीतेष्वष्टौ पदानि सन्ति, अतो हि केचिदष्टपदीति नाम्नापि वदन्ति।

परन्तु जयदेवस्य काव्यं निरतिशयरुचिरं मनोहारी च वर्तते। यथा–

"कपिलादिकसनकादिनिषेवित–
मशुभरामनमतिभारम्।
वेदपुराणसकलसम्मतमिव–
सादितविषमविकारम्॥
चिन्तामणिसुरधेनुकल्पतरु
कोटिदानगुणशीलम्।
प्राकृततत्त्वप्रपंचरोगहर–
मखिलचराचरलीलम्॥
श्रीजयदेवभणितमतिमंजुल–
मधुरमनोहरगानम्।
दिशुत सदा मंगलमतुलितमिति–
परमानन्दनिधानम्॥"

धनुराकर्षणादेवावगतज्ञानो मुनिः स्तौति वसन्तरागेण रूपकतालेन च-

''जय रामचन्द्र! कमलाविहार!।
जय कोशलेश! करुणावतार!॥
रघुवंशकमलकाननदिनेश!।
कन्दर्पकोटिकमनीयवेश!॥
कालाग्निसदृशकोपातिरेक!।
गन्धर्वगीतपूरितविवेक!॥
रजनीचरप्रकरविपिनदाव!॥
वेदान्तवेदगण भणित भाव!॥
वागीश! सर्वविद्या विचार!।
ब्रह्मादिवन्द्य! हृतभूमिभार!॥
मदमोहकामपन्नगखगेश!।
शरदिन्दुनिभाननकुटिलकेश!॥
तडिदाभवसन! रमणीयहास!।
कुन्दाभदसन! मायाविलास॥
जयदेवविनयमतिशयमवेहि।
निजचरणकमलमधुमेऽव देहि॥''

अपि च-

''राजदनेकलवंगलता लवलीमुनिपादपचूते।
भ्राजिततुरगतरंगविकाशलसत्तुलसीदलपूते॥
देवगृहैरभितः स्फुरतिप्रणवादिकमन्त्रविचारे।
ध्यानपरायणसिद्धसमूहनिराकृतविषयविकारे॥

एवं हि देशरागरूपकतालाभ्यां रामं प्रति हनुमान् सीतायाः वर्णनं कुर्वन्नाह–

''रजनीचररमणीपरिवीता।
बालचन्द्रकलिकेव सभीता॥
नाथ! हरे! सीदति सीताऽशोकवने॥
कृशशरीरं गतिरतिशयदीना।
भूमिशयाशनसलिलविहीना॥
ध्यायति तवमुखचन्द्रमुदारम्।
त्यजति भुजगमिव मणिभयहारम्॥
भजति निशेषकिरणमिव जालम्।
स्पृशति करेण मुहुर्निजभालम्॥
कलयति शरमिव मलयसमीरम्।
मुंचति तप्त विलोचननीरम्॥
विरहतया विदधति न हासम्।
जनयति वह्निविषमनिश्वासम्॥
रामरामरामेति सकामम्।
वदति विलापतया वसुयामम्॥
श्रीजयदेवकवेरिदमुदितम्।
सुखयतु रामभक्तमतिमुदितम्॥

यादृशी यमकानुप्रासालंकारैर्भावव्यंजना रामगीतगोविन्दे आविष्कृता, सा सुतरां साहित्यान्तरे दुरवापैव। यावन्मात्रं भाषायां माधुर्यं तावन्मात्रमेव भावेषु सौन्दर्यमित्यलमतिविस्तरेण॥



# स्कान्दपुराणे राजनीतिविचारः

डॉ० वुप्पल श्रीनिवास शर्मा, हैदराबाद

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।

परोपकारः पुण्याय पापाय परपीडनम्॥

इति श्लोक्तदिशा व्यासस्य सर्वं साहित्यमपि लोकहिताय, सामाजिकहिताय सांस्कृतिकश्रेयसे, मानवस्य अभ्युदयाय च अस्ति। साहित्ये तस्मिन् पुराणानि प्रसिद्धानि भवन्ति। शतानि पुराणानि विज्ञानसर्वस्वानि इति वक्तुं शक्यन्ते। एतेषु पुराणेषु मानवाभ्युदयाय उपयुक्ताः विषयाः बहवो चर्चिताः। तादृशविषयेषु ''पुराणेषु राजनीति विचाराः बहुषु पुराणेषु दृश्यन्ते। परन्तु अधुना स्कान्दपुराणे राजनीतिविचारः इत्यंशमधिकृत्य पस्तूयते। मत्स्यादिपुराणेषु यथा राजधर्मबोधकाः अध्यायाः पृथक् पृथक् वर्तन्ते न तथा स्कान्दपुराणे, तथापि तत्र तत्र सन्दर्भानुसारं दण्डनीतिः, राजधर्मः राजनीतिः नीतिशास्त्रं मन्त्रशास्त्रादि च बहवो समुपलभ्यन्ते। दण्डयित्री दण्डनीतिरिति तां आलक्ष्यस्कान्दपुराणं दण्डनीते-रुत्कृष्टतामपि व्यनक्ति। विषयेऽस्मिन् पुराणमिदं कौटिल्यमतानुसारीति वक्तुं शक्यते।[1]

स्कान्दपुराणं दण्डनीतिषु प्रवीणानां, राष्ट्रकर्मणि निष्णातानां, राजनीतिषु निष्णातानां राजकर्मसु कुशलानां च प्रसंगं प्रस्तौति।[2] मनु-बृहस्पतिशुक्रादीनामाचार्याणां प्रस्तुतिर्वर्ततेऽत्र। एवमेव शरतल्पसङ्गतोऽपि भीष्माचार्यः पाण्डवेभ्यः उपदिदेश राजधर्ममित्यपि प्रस्तुतमस्ति।

धर्मशास्त्रप्रयोजकानां समेषां

मन्वादि वशिष्टपर्यन्तानामाचार्याणां नामनिर्देशः समुपलभ्यते अस्मिन्पुराणे।[3] एवमेव

---

1. अर्थशास्त्रम् 6-1
2. 2-2-11, 16, 4-1-19-30
3. स्का. 1-2-4-, 209, 210

राज्ञो धर्माः प्रजाः प्रति मनुवशिष्टादिभिः सम्यक् यथा चर्चिताः तथा अस्मिन् पुराणे दृश्यन्ते। शाकल्यनारदादयः ऋषयः राजनीतिविषये यादृशान् विचारान् प्राकटयन् तानिदं पुराणं प्रस्तौति।

समाजविषये स्वमतं प्रतिपादयदिदं पुराणं वैयक्तिकभावानामयं जीवनं यदा यापयन्ति, तदा समाज एव नष्टो भवति। स्वाभिलषितसम्पादनाय यदा ते समुत्सुकाः भवन्ति, स्वार्थसम्पीडितास्तदा राष्ट्रमराजकं भवति। अन्ततश्च दुःखभाजनं च भवतीति स्पष्टयति। सर्वथा मर्यादाविषये अत्यन्तजागरूकतां प्रदर्शयन्ति पुराणानि। स्कान्दपुराणानुसारं ''निरङ्कुशस्सर्वो हि लोके मर्यादालङ्घने रतः'' इत्युद्वीक्ष्य शास्त्रं वीक्ष्य च युधिष्ठरेण मर्यादा स्थापितेति ज्ञायते।

स्कान्दपुराणानुसारं राष्ट्रं नाम 'मर्यादा' एव। दण्डिनो मतानुसारं तु अध्वाऽपि भवति। कृतयुगे जनाः आनन्दमयं तरतमभेदरहितं च जीवनं यापयन्तः सुखिनः आसन्। वैरं, असूया द्वेषश्च न कदापि जनेषु स्थानमलभत। स्वप्रान्तभेदे सत्यपि जनाः स्नेहभावनया परस्परं सम्बद्धाः आसन्। वर्णाश्रमधर्माभावेऽपि वर्णसङ्करादिकं नासीदिति कृतयुगीनां मानवजीवनपरिस्थितिं वर्णयति स्कान्दपुराणम्।

''सप्ताङ्गं राज्यमुच्यते'' इति यदवोचि विपश्चिद्भिः तमेव विषयं प्रतिपादयत् स्कान्दपुराणं प्रमुञ्चनामकस्य कस्यचन ऋषेः दुर्दमनामकस्य कस्यचन राज्ञः मध्ये संभाषणरूपेण सप्ताङ्गविषयां चर्चां करोति।

अनायकं राज्यं, चन्द्रार्कविहीनं जगत्सर्वं यथा न नन्दति, तथा न नन्दतीति प्रतिपादयत् स्कान्दपुराणं नायकस्याथवा राज्ञः प्रामुख्यं प्रस्तौति। राज्यस्य मूर्धा नृप इत्यपि यदस्ति शुक्रस्यवाक्यं, तदनुसारं स्कान्दपुराणं ''राजा धर्मस्य कारणम्'' इति समुद्घोषयत् धर्मकारणस्य राज्ञः बलीयसः धर्मान् सूचयति। 'मृतं राष्टमराजकम्' इत्यनेन स्कान्दपुराणान्तर्गतवाक्येनैव राज्ये राज्ञः स्थानं विशिष्टमिति ज्ञायते।

सार्वकालीनं सत्यं च राजविषये स्कान्दपुराणे समुपलभ्यते। मत्स्यन्यायेनाथवा जलचरन्यायेन जनाः अराजके राज्ये वर्तन्ते, बलवन्तो दुर्बलान् बलवतोऽपि बलावत्तराः पीडयन्तःवर्तन्ते। दिक्पालकानामष्टानां अंशेभ्यः प्रजापालनायै राजा सृष्टः इति स्कान्दपुराणे वर्तते। मनुस्मृत्यामपि विषयोऽयं दृश्यते।

यथा–

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।

चन्द्रविलेशयोश्चैव मात्रा निर्हत्य शाश्वतीः[1]

अराजके राज्ये वर्धमानान् दुष्टबलान् जनान् दण्डयितुं धर्मवर्ती राजा सर्वदा अपेक्ष्यत इति स्कान्दपुरणात् ज्ञायते।

मनुस्मृतिरपि एवं वदति–

अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात्।

रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः॥ मनु

राजा कीदृशगुणविशिष्टो भवेदित्येतस्मिन् विषये स्कान्दपुराणं राजा षड्त्रिंशत् (36) गुणसम्पन्नो भवेदिति सूचयत् तान् गुणानपि स्पष्टरूपेण कथयति[2] महाभारते शान्तिपर्वाणि एतादृशानां गुणानां चर्चा कृता वर्तते।

सर्वविधगुणसम्पन्न एव राजा भवेदिति स्कान्दपुराणं वदति[3] "सौशील्यादिगुणानामाकारो भवेद्राजा" इति स्कान्दस्याभिप्रायः।[4] दर्भिक्षं रोगाः ईतयश्च राजगुणानुसरिण्यः[5] इति स्कान्दपुराणे दृश्यते। यदि राजा अधर्मपालकः तर्हि राज्यं सर्वविधकष्टपीडितं भवति स्वधर्मपरायणत्वं च गुणेषु अन्यतमो गुण इति ज्ञायते।

अनवरतस्वाध्यायोऽपि राज्ञो विहितः। 'निद्याविशारदो भवेद्राजा' इत्येतत् स्कान्दवाक्यं राज्ञः स्वाध्यायप्रामुख्यं विशदीकरोति। यद्यप्यधिकं प्रामुख्यं राज्ञः दत्तमिति भाति, तथापि ते गर्वपूरिताः न भवेयुरिति मत्या स्कान्दपुराणं 'राजानः क्षित्रिया किङ्करत्वे हि निर्मिता' इति भणति।

1. मनु 7-4
2. स्कान्द 7-2—17-85
3. स्कान्द 5-1—14-9
4. स्कान्द 2-1—9-54
5. 5-2—23-2

## राज्ञः कर्तव्यानि

धर्मपालनं नाम धर्मस्य पालनं, धर्मेण पालनं च राज्यरक्षा, प्रजापालनं च प्रजानुरञ्जनमेव क्षात्रधर्म इति स्कान्दोक्तिः। रञ्जनादेव राजशब्दनिष्पत्तिरिति स्कान्दवचनम्।[1] रघुवंशेऽपि कालिदासः एवं वदति'' राजा प्रकृतिरञ्जनात्[2] प्रजाभ्यः पुण्यपापानां षष्ठं राजा समुद्धरति इति तस्मात् ज्ञायते। यत्किमपि शुल्करूपेण राज्ञे समर्पितं तत्पूजारक्षणार्थं राज्यरक्षणार्थमेव च' राजा हि यत्नतो रक्ष्यो यत्प्रसादादिदं जगदिति''–पुराणोक्तं वचः। राजन्यवश्यंभाविनो गुणाः राजकत्वं सामर्थ्यं सौशील्यं वीर्यं, शौर्यं, विप्रभक्तिरित्यपि स्कान्दपुराणं ज्ञापयति। सार्वभौमत्वं न कदापि अधर्मवर्तिभिः पापैश्च जनैर्लभ्यते। परन्तु तपोभिर्नियमैः दानैश्शुभव्रतैरेव लभ्यत इति स्कान्दपुराणं स्पष्टयति। गजवाजिरथास्त्रेषु विधिमालाम्बरद्रुमा'' इति सप्तरत्नलक्षितो भवति राजा।[3]

सप्ताङ्गे राज्ये अमात्यस्य स्थानं प्रमुखमस्ति। मन्त्रिपरिषदः मुख्याङ्गत्वं प्रतिपादयत् स्कान्दपुराणं मन्त्रिहीनं राज्यं श्रुतिज्ञानरहितब्रह्मवद् भवतीति वर्णयति। अर्थविहिना वागिव गङ्गाविहीनप्रदेश इव न शोभत इति स्पष्टयति।[4] मन्त्री, अमात्यः, सचिवः इत्येने शब्दाः पर्यायशब्देन प्रयुक्ताः दृश्यन्ते। राज्ये अमात्यस्य इव पुरोहितस्यापि प्रामुख्यं वरीवर्ति। अमात्या अपि सुगुणसम्पन्ना भवेयुः। एवमेव मन्त्ररहस्यविदश्च भवेयुरिति स्कान्दपुराणं वदति। हितं मन्त्रयते राज्ञस्तेन मन्त्री निगद्यते[5] इति व्युत्पत्तिरपि तत्र दृश्यते। मन्त्रिणां कार्यमिदमासीद्यत् समये मन्त्रदानं रिपूणां मन्त्रहीनं च। पालकस्य निधनानन्तरं राज्यपालकरूपेण योग्यजन स्थापनमपि अमात्यायत्नमासीत्। ''राजा वृक्षः मन्त्रिणस्तस्य शाखाः।[6] एवं सप्ताङ्गेषु अन्यतमं कोष इत्यङ्गम्। ''धर्मार्थैर्वर्धितो कोपः भवेत्।'' जितेभ्यः पालकेभ्यः धनं समुपार्ज्य कोशो वर्धितो भवेदिति स्कान्दोक्तिः। कुलशीलगुणोपेतः, सत्यधर्मपरायणः, रूपवान् सुप्रसन्नश्च कोषाध्यक्षो विधीयते इति यदस्ति गरुड़पुराणोक्तं वाक्यं तदनुगुणं वदति स्कान्दपुराणमपि।

---

1. स्का० 7-1-336-175
2. रघुवंश 4-12
3. स्का० 2-2-21-51
4. स्का० 4-2-17 90-93
5. स्का० 1-2 32-4
6. स्का० 7-1-22-82

कोषाध्यक्षाणां, कोषाधिकारिणां कोषागारनियुक्तानां च प्रस्तावो दरीदृश्यते स्कान्दे। कोषस्य सैन्यस्य च मध्ये वर्तमानं घनिष्ठं सम्बन्धं स्पष्टीकुर्वत् स्कान्दपुराणं कोषसैन्यादिजा चिन्ता तथारिमदनाडिजा[1] इति प्रस्तौति। बलमूलो भवेत्केणो, बलमपि कोषमूलं स्मृतमिति खलु नीतिः। अतः प्रजारक्षां मनसि निधाय राजानः सैन्यं वर्धयितुं कोषबलं च द्रढीकर्तुं करान् (Taxes) गृह्णन्ति स्म। अश्वगजबलयुतं सैन्यं वर्धयितुं धनमपेक्ष्यते। तादृशं धनं प्रजाभ्यः करग्रहणाद्वारा (through taxes) समुपार्ज्य तेन धनेन सर्वविधबलसम्पन्नो भवेद्रजा इति स्कान्दपुराणं वदति। तत्रैव केषांचन राज्ञां ये विना करग्रहणं दैवीशक्त्या मन्त्राद्युपायेन च स्वबलमभ्यवर्धयन् तेषां वर्णनं समुपलभ्यते। कोषागारस्य प्रधानं बलं करग्रहणमेव। यथा राज्ये प्रजाः अधिककरग्रहणवशात् न क्लिश्नीयुः यथा च करमदत्वा चरेयुः तथा पारिपालयितुं राजानः पर्यटन्ति स्म। स्कान्दपुराणं कलिकालराज्ञां विषयेऽपि वास्तवं प्रदर्शयति। कलिकाले राजानः करदानपरा नित्यं[2] इति स्कान्दं वदति।

. एवमेव दुर्गराष्ट्रबल-मित्र विषयकमपि चर्चां पुरःस्थापयति स्कान्दपुराणम्। देशकालानुसारं कूटनीतिप्रदर्शनमप्युपदिशति पुराणमिदम्। बलवलपरिस्थितिभिः सम्पीड्यमानैः न केवलं साहसं प्रज्ञा पौरुषादिकमपि ग्राह्यमिति स्कान्दमुपदिशति।[3] राज्ञः राज्याधिकारादपि धर्मस्याधिकार उत्तम इति वदति। राजा न केवलं प्रजानामपि तु धर्मस्यापि पालकः। राज्यवृक्षस्य मूलभूतानां ब्राह्मणानां रक्षणं सर्वविधसदुपायैः करणीयमिति ज्ञापयति। मूले दृढ़े सति वृक्षः पुष्प्यति फलति च। यस्मिन् राज्ये विप्राः क्षुधार्ता म्रियन्ते तद्राज्यं विनष्टं भवति छिन्नमूलस्तरुरिव।

यद्यपि धर्मस्य प्राधान्यं, धर्मानुवर्तनस्य च प्राधान्यं बहुधा जुधोष्यते स्कान्दपुराणे। तथापि केचन अधर्मानुवर्तिनः राजानः आसन्निति ज्ञायते। तेषां विषयेऽपि न मृदुतामवलम्बते पुराणमिदम्। "प्रजापीडकरं भूपं अन्धे कूपे निपातय" इति सूचयन् प्रजापीडकराणां भूपानामन्तिमां गतिं सूचयति। एवमेव समान्यजनानां विषयेऽपि दण्डाः प्रदर्शिताः यो जनः समाजव्यवस्थां छेत्तुं प्रयतते स्वदुष्टकर्मभिः तस्य मरणं वा देशान्निष्कासनं वा दण्डः इति स्कान्दोक्तिः।

---

1. स्का० 2-61-11
2. स्का० 2-2-3834
3. स्का० 1-2-21-248

परिपालनं विपये एवमेव ग्रामपालन विषये अतिमुख्या: केचनांशा: स्कान्दपुराणे समुपलभ्यन्ते। पुरपालने मुख्य: पुरपाल: अथवा गोप्ता। तस्य सहायकरूपेण अष्टौ प्रमाणपुरुषा: पौराणां कार्यदर्शिन:[1] स्मृत्याचारविशारदश्च भवेयु:। परिपालकेन पुरं दिग्गजैरिव भूपिण्ड: अनवरतं रक्ष्यमाणं वर्तते।

ग्रामपालनं ग्रामसभाया अधीने वर्तते। लोकविद्यासु निपुणा: कुलवद्धा: सभ्यजना: भूत्वा ग्रामसभाद्वारा ग्रामं परिपालनीयमिति स्कान्दपुराणादवगम्यते।

एवमेव धर्मशास्त्रत: शासनं ताम्रपत्राणामुपरि लिखितमासीत्।[2] नवीनानां शासनं उपयोगो बहुधा कृतो दृश्यते। वंशवर्णनात्मकं देशकालादिकं मुद्राचिह्नितं वा शासनं भवति स्म। एवमेव भूदानस्यापि विषय: शासने समुल्लिखितो दृश्यते। स्कान्दमनुसृत्य भूमिदानं अश्वमेधसहस्र तुल्यं अथवा राजसूयशततुल्यमासीत्।[3]

एवमेव स्कान्दपुराणं राजनीतिविषियान् बहून् मूल्यानंशान् प्रस्तुत्य कथं वा राज्यं सुखमयं भवेत्। कथं वा राजा चिरकीर्तिमान् भवेदिति स्पष्टं निर्दिशति।



1. स्का० 7-1-24-80
2. स्का० 3-234-5
3. स्का० 3-234-32

# कालिदास के महाकाव्यों तथा गीतिकाव्यों में वनस्पति

प्रो० सलमा महफूज, अलीगढ़

महाकवि कालिदास की गणना विश्व के श्रेष्ठ कवियों में की जाती है। उनके रचना कौशल के कारण ही संस्कृत साहित्य में उन्हें कविकुलगुरु तथा कवि 'शिरोमणि' आदि उपाधियाँ प्रदान की गयीं। महर्षि अरविन्द ने उनके विषय में कहा है–

''वाल्मीकि, व्यास तथा कालिदास प्राचीन भारतीय इतिहास की अन्तरात्मा के प्रतिनिधि हैं, और सब कुछ नष्ट हो जाने के बाद भी उनकी कृतियों में हमारी संस्कृति के प्राण तत्त्व सुरक्षित रहेंगे।''[1]

कालिदास ने रघुवंशम्, कुमारसम्भवम् नामक महाकाव्यों, ऋतुसंहारम् तथा मेघदूतम् नामक गीतिकाव्यों, मालविकाग्निमित्रम्, विक्रमोर्वशीयम् तथा अभिज्ञान-शाकुन्तलम् नामक नाटकों की रचना की।

ऋतुसंहारम् कालिदास की सर्वप्रथम रचना मानी जाती है। यह एक खण्डकाव्य है। इसका वर्ण्य-विषय षड्ऋतु वर्णन है। इसमें छः सर्ग तथा 144 श्लोक हैं।

मेघदूतम् कालिदास द्वारा रचित एक उत्कृष्ट गीतिकाव्य है। यह गीतिकाव्य दो भागों पूर्वमेघ तथा उत्तरमेघ में विभाजित है। इसमें 121 श्लोक हैं तथा यह मन्दाक्रान्ता छन्द में लिखा गया है।

कुमारसम्भवम् कालिदास का प्रथम महाकाव्य है। इसमें 17 सर्ग है। इस महाकाव्य में शिव और पार्वती के पुत्र कार्तिकेय के जन्म तथा उसके द्वारा देवसेना का सेनापति बनकर तारकासुर के वध की कथा को प्रस्तुत किया गया है। इसका अंगी रस शृंगार है।

रघुवंशम् कालिदास द्वारा रचित 19 सर्गीय चरित्र प्रधान महाकाव्य है। इसमें कवि ने सूर्यवंशीय राजा दिलीप से अग्निवर्ण तक 29 राजाओं का वर्णन किया है।

मालविकाग्निमित्रम् 5 अंकों का नाटक है। यह शृंगार रस प्रधान है। कालिदास की प्रथम नाट्य रचना होने के कारण उनकी प्रतिभा का पूर्ण प्रसार इसमें नहीं हो सका है। इस नाटक का नायक विदिशा का राजा अग्निमित्र है तथा नायिका विदर्भराज की बहन मालविका है। अग्निमित्र तथा मालविका की प्रणय कथा इस नाटक में निबद्ध है।

अभिज्ञानशाकुलन्तलम् विश्व के नाटकों में सर्वोत्कृष्ट है। इसमें सात अंक हैं। इस नाटक में राजा दुष्यन्त तथा शकुन्तला की प्रणय-गाथा वर्णित है। कालिदास ने महाभारत के आदिपर्व के शकुन्तलोपाख्यान का आश्रय लेकर इस नाटक की कथावस्तु का सृजन किया है।

विक्रमोर्वशीयम् पाँच अंकों का नाटक है। इसका नायक राजा पुरुरवा तथा नायिका अप्सरा उर्वशी है। इसमें शृंगार रस की प्रधानता है। इसकी कथा ऋग्वेद तथा शतपथ ब्राह्मण से ली गयी है।

कालिदास का भाषा पर पूर्ण अधिकार था। उनके पास शब्दों का अगाध भण्डार था। उनके संवाद छोटे-छोटे सरल तथा आकर्षक थे। पात्रानुकूल भाषा का प्रयोग कालिदास की एक अन्य विशेषता है। उन्होंने वैदर्भी शैली को अंगीकार किया है।

कालिदास को प्रकृति का सूक्ष्म द्रष्टा माना जाता है। उनकी प्रकृति मनुष्य के समान सजीव प्रतीत होती है। उन्होंने अपने काव्यों में प्रकृति के अन्तः तथा बाह्य दोनों रूपों का अत्यन्त कुशलता के साथ चित्रण किया है। कालिदास के काव्य में प्रकृति के आलम्बन, उद्दीपन, मानवीय तथा आलंकारिक रूपों के उदाहरण यत्र-तत्र उपलब्ध होते हैं।

डॉ० हजेला ने कालिदास के प्रकृति प्रेम को स्पष्ट करते हुए कहा है–

"मानव जीवन में प्रकृति के बहुमूल्य योग को कवि ने भली-भाँति पहचाना है। उनकी दृष्टि में मानव जीवन और प्रकृति एक दूसरे के पूरक हैं और एक के अभाव में दूसरे का अपूर्ण भासित होना सर्वथा स्वाभाविक है। कालिदास ने अपने ही ढंग से प्रकृति

को मानव संवेदना का भागी बनाया है। उनकी प्रकृति मनुष्य सत्ता से खण्डित करके नहीं देखी जा सकती। उनकी प्रत्येक कृति मानव और प्रकृति के अन्योन्याश्रित सम्बन्ध का निदर्शन है।''[2]

कालिदास ने प्रकृति चित्रण करते समय बहुत सी ऐसी वनस्पतियों का उल्लेख किया है जो अत्यन्त दुर्लभ हैं तथा किसी न किसी रूप में मानव के लिये उपयोगी रही हैं। प्रकृति के इस रूप में कवि ने बहुत से वृक्षों, पुष्पों तथा फलों का नामोल्लेख किया है।

चन्दन का वर्णन प्रायः सभी कवियों ने किया है। चन्दन प्राचीन समय से ही सन्तापहारक तथा उत्तम लेप माना जाता है। जिसका प्रयोग करने से शरीर की व्याधियाँ दूर होती हैं।

कवि के अनुसार चन्दन के वृक्षों में सांपों के लिपटने से बनी हुई रेखाओं में बंधे हुए पैर की श्रृंखला को तोड़ डालने वाले हाथियों के कण्ठ के बन्धन ढीले नहीं हुए--

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।

नास्त्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि॥[3]

कदम्ब का वर्णन करते हुए कालिदास कहते हैं कि वन में चारों ओर खिले हुए कदम्ब के पुष्प ऐसे लग रहे हैं मानो वर्षा के नये जल से गर्मी दूर हो जाने पर जंगल मगन हो उठा हो। वायु से झूमती हुई शाखाओं को देखकर ऐसा लगता है मानो पूरा का पूरा वन अपने हाथ को हिला-हिला कर नाच रहा हो और केतकी की उजली कलियों को देखकर ऐसा लगता है मानो वन खिलखिलाकर हँस रहा हो--

मुदित इव कदम्बैर्जातपुष्पैः समन्ता-

-त्पवनचलितशाखैः शाखिभिर्नृत्यतीव।

हसितमिव विधत्ते सूचिभिः केतकीनां

नवसलिलनिषेकच्छिन्नतापो वनान्तः॥[4]

अन्यत्र भी कदम्ब का उल्लेख मिलता है–

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरुढै-

राविर्भूतप्रथममुकुला: कन्दलीश्चानुकच्छम्।

जग्ध्वारण्येष्वधिकसुरभिं गन्धमाध्राय चोर्व्या:

सारंगास्ते जललवमुचः सुचयिष्यन्ति मार्गम्॥[5]

अखरोट का वर्णन कालिदास ने अक्षोट के नाम से किया है। कम्बोज या काबुल के राजा भी लड़ाई में रघु के आगे नहीं ठहर सके। इसका कारण बताते हुए कवि कहता है कि जिस प्रकार हाथियों के बांधने से वहां के अखरोट के वृक्षों की डालियां झुक गयीं थीं उसी प्रकार वे राजा भी रघु के आगे झुक गये–

काम्बोजा: समरे सोढुं तस्य वीर्यमनीश्वरा:।

गजालानपरिक्लिष्टैरक्षोटै: सार्धमानता:॥[6]

कदली का वर्णन भी कवि ने अपने ग्रन्थों में किया है। बावड़ी के किनारे पर सुन्दर इन्द्रनीलमणियों से निर्मित शिखरों वाला तथा सुनहरी केलियों की बाड़ के कारण दर्शनीय क्रीड़ा पर्वत है। हे मित्र! किनारों पर चमकती हुई बिजली वाले तुमको देखकर–मेरी पत्नी का प्रिय है–इस कारण व्याकुल चित्त से उसकी का स्मरण कर रहा हूँ–

तस्यास्तीरे रचितशिखर: पेशलैरिन्द्रनीलै:

क्रीडाशैल: कनककदलीवेष्टनप्रेक्षणीय:।

मद्गेहिन्या: प्रिय इति सखे चेतसा कातरेण

प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि॥[7]

कर्णिकार अर्थात् कनेर के पुष्प में सुगन्ध नहीं होती। इस विषय में कालिदास का कथन है कि ब्रह्मा किसी भी वस्तु को सम्पूर्णता प्रदान नहीं करता–

वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः।

प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः॥[8]

ऋतुसंहार में भी कर्णिकार का वर्णन प्राप्त होता है–

कर्णेषु योग्यं नवकर्णिकारं चलेषु नीलेष्वलकेष्वशोकम्।

पुष्पं च फुल्लं नवमल्लिकायाः प्रयान्ति कान्तिं प्रमदाजनानाम्॥[9]

और भी–

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं

किं कर्णिकारकुसुमैर्न कृतं नु दग्धम्।

यत्कोकिलः पुनरयं मधुरैर्वचोभि-

र्यूनां मनः सुवदनानिहितं निहन्ति॥[10]

कुटज के पुष्प का प्रयोग पूजा-अर्चना के लिये किया जाता था। क्योंकि मेघदूत में यक्ष कुटज के पुष्पों द्वारा मेघ की पूजा करता है–

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी

जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम्।

स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै

प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार॥[11]

कुटज का उल्लेख रघुवंश तथा ऋतुसंहार में भी उपलब्ध होता है–

अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसांगरागिणः।

प्रावृषि प्रमदबर्हिणेष्वभूत्कृत्रिमाद्रिषु विहारविभ्रमः॥[12]

अन्यत्र भी–

नृत्यप्रयोगरहितान् शिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान्।
मुक्त्वा कदम्बकुटजार्जुनसर्जनीपा-
न्सप्तच्छदानुपगता कुसुमोद्गमश्रीः॥[13]

कालिदास ने सुपारी तथा पान की चर्चा की है। कवि के अनुसार मलय पर्वत की घाटियाँ पान की बैलों से ढके हुए सुपारी के वृक्षों, इलायची की बैलों से ढके हुए चन्दन के वृक्षों तथा ताड़ पत्रों से पूर्ण हैं।[14]

चन्दन के समान ही अगुरु भी लेपन करने तथा कक्षों को सुवासित करने के काम में आता था। कवि ने कल्पना की है कि जिस तरह हाथियों के बंधने से कालागुरु के वृक्ष कांपते थे उसी प्रकार प्राग्ज्योतिष के राजा भी रघु के भय से कांपने लगे–

चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः॥[15]

**कोविदार एक वृक्ष का नाम है। कालिदास ने कोविदार का उल्लेख करते हुए कहा है–**

**मन्दानिलाकुलितचारुतराग्रशाखः**
**पुष्पोद्गमप्रचयकोमलपल्लवाग्रः।**
**मत्तद्विरेफपरिपीतमधुप्रसेक–**
**–श्चित्तं विदारयति कस्य न कोविदारः॥[16]**

**अर्थात् जिसकी शाखाओं की सुन्दर फुनगियों को धीमा-धीमा पवन झुला रहा है, जिस पर बहुत से फूल खिले हैं जिसकी पत्तियाँ अत्यन्त कोमल हैं और जिसमें से बहते**

हुए मधु की धार को मस्त भौंरे धीरे-धीरे चूम रहे हैं, ऐसा कोविदार का वृक्ष किसका हृदय विदीर्ण नहीं कर देता।

कालिदास ने कमल के दो प्रकारों का वर्णन किया है, एक तो पद्म तथा दूसरा स्थलारविन्द अर्थात् स्थल कमल। पद्म की विशेषता को स्पष्ट करते हुए कवि ने कहा है कि हिमालय की ऊँची चोटियों पर बने हुए सरोवरों में खिलने वाले कमलों को स्वयं सप्तर्षिगण अपनी पूजा के लिये तोड़कर ले जाते थे। शेष कमलों को ही सूर्य प्रातः उदित होकर विकसित करता है–

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः।

पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः॥[17]

अन्यत्र स्थल कमल का विवरण मिलता है–

अभ्युन्नतांगुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ।

आजह्वतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्॥[18]

कमल के अतिरिक्त कवि ने शेफालिका अर्थात् हरसिंगार के पुष्पों का उल्लेख किया है। इन पुष्पों को देखकर लोगों का मन चंचल हो जाता है–

शेफालिकाकुसुमगन्धमनोहराणि

स्वस्थस्थिताण्डजकुलप्रतिनादितानि।

पर्यन्तसंस्थितमृगीनयनोत्पलानि

प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम्॥[19]

कुमारसम्भवम् में यव अर्थात् जौ का वर्णन मिलता है। कालिदास के अनुसार पार्वती के कानों पर लटकते हुए जौ के अंकुर और लोध से रंगे तथा गोरोचन लगे हुए गौरवर्णीय कपोल इतने सुन्दर लगते थे कि सबकी आंखे बरबस उनकी ओर आकृष्ट हो जाती थीं–

कर्णार्पितो लोध्रकषायरुक्षे गोरोचनाभेदनितान्तगौरे।

तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः॥[20]

यव के समान ही खजूर, इलायची, लौंग आदि ऐसी वनस्पतियाँ हैं जिनका उपयोग मानव प्राचीन काल से खाद्य पदार्थों के रूप में करता आ रहा है। कवि ने इनका वर्णन अत्यन्त कुशलता से किया है। खजूर की चर्चा करते हुए कवि ने कल्पना की है कि नागकेसर के पुष्पों पर बैठे हुए भ्रमरों को जैसे ही खजूर की डाली से बंधे हुए हाथियों के कपोलों से टपकते हुए मद की गन्ध मिली कि वे उन्हें छोड़कर इन पर ही आ गये–

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु।

कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः॥21

राजा रघु की सेना के घोड़ों की टापों से चूर्णित इलायची के फलों की उड़ती हुई धूलियाँ संमानगन्धी गजों की कनपटी में लगीं–

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः।

तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥22

इन्दुमती के स्वयंवर के प्रसंग में कवि ने लौंग का वर्णन किया है–

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु।

द्वीपान्तरानीतलवंगपुष्पैरपाकृतस्वेदलवैर्मरुद्भिः॥23

अर्थात् हे इन्दुमती! तुम चाहो तो कलिंगराज हेमाङ्गद के साथ विवाह करके समुद्र के उन तटों पर विहार करो जहाँ दिन-रात ताड़ के जंगलों की तड़तड़ाहट सुनाई देती है और वहाँ जब तुम्हें पसीना आया करेगा तब लौंग के फूलों की सुगन्ध में बसा हुआ दूसरे द्वीपों से आता हुआ शीतल पवन तुम्हारा पसीना पोंछ दिया करेगा।

लौंग के अतिरिक्त मरीच अर्थात् मिर्च का वर्णन मिलता है–

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः।

मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः॥24

कवि ने कल्पद्रुम का वर्णन किया है। राजा दिलीप के पूछने पर जब महर्षि वशिष्ठ उनके निःसन्तान होने का कारण बताते हैं कि उन्होंने कल्पवृक्ष की छाया में सुरभि गौ का सम्मान नहीं किया था।[25]

दूर्वा पूजन के काम में आती थी। राजा कुश के पुत्र अतिथि के राज्याभिषेक के समय वृद्ध पुरुषों ने दूब, जौ के अंकुर तथा बड़ की छाल एवं नये पत्तों के दोनों में रखकर आरती की–

दूर्वा–यवांकुर–प्लक्ष–त्वगभिन्न–पुटोत्तरान्।

ज्ञातिवृद्धैः प्रयुक्तान् स भेजे नीराजनाविधीन्॥[26]

पूजा के अतिरिक्त माला में भी दूर्वा अथवा दूब का प्रयोग किया जाता था–

एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वांकमधूकमाला।

ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा॥[27]

अर्थात् सुनन्दा के कहने पर इन्दुमती ने नेत्र उठाकर उस राजा को देखा, उसके हाथ से दूर्वा युक्त महुए की माला कुछ सरक गयी और बिना कुछ कहे ही साधारण रूप से प्रणाम करके उसे अस्वीकार करती हुई आगे बढ़ गयी।

और भी–

सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नरागम्।

निर्नाभि कौशेयमुपात्तबाणमभ्यंगनेपथ्यमलंचकार॥[28]

कालिदास के ग्रन्थों में वनस्पतियों का पर्याप्त उल्लेख मिलता है। विस्तार के भय से सभी वनस्पतियों का उल्लेख करना सम्भव नहीं है। किन्तु उपर्युक्त विवरण से यह स्पष्ट हो जाता है कि उन्होंने अपने ज्ञान तथा कल्पना का समावेश करके वनस्पतियों का वर्णन अत्यन्त सहजता के साथ किया है। कवि ने ऐसे विविध उपमानों तथा संकेतों का प्रयोग किया है जिनके कारण ये वनस्पतियाँ उनके प्रकृति चित्रण के सहायक के रूप में प्रकट होती हैं।

## सन्दर्भ सूची

1. मेघदूत, भूमिका, पृ० 16
2. कालिदास और प्रकृति–डॉ० पुष्पा हजेला, प्रथम अध्याय, पृ०–22
3. रघुवंश, 4/48
4. ऋतुसंहार, 2/23
5. मेघदूत, पूर्वमेघ–21
6. रघुवंश, 4/69
7. मेघदूत, उत्तरमेघ–17
8. कुमारसम्भव, 3/28
9. ऋतुसंहार, 6/6
10. वही, 6/22
11. मेघदूत, पूर्वमेघ–4
12. रघुवंश, 19/37
13. ऋतुसंहार, 3/13
14. ताम्बूलवल्लीपरिगणद्धपूगास्वेलालतालिंगितचन्दनासु।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु॥ –रघुवंश, 6
15. रघुवंश, 4/81
16. ऋतुसंहार, 3/6
17. कुमारसम्भव, 1/16
18. वही, 1/33
19. ऋतुसंहार, 3/14
20. कुमारसम्भव, 7/17
21. रघुवंश, 4/57
22. रघुवंश, 4/47
23. रघुवंश, 6/57
24. वही, 4/46
25. पुरा शक्रमुपस्थाय तवोर्वी प्रति यास्यतः।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि॥ –रघुवंश, 1/75
26. रघुवंश, 17/12
27. वही, 6/25
28. कुमारसम्भव, 7/7

## सन्दर्भ ग्रन्थ सूची


1. ऋतुसंहारम्–कालिदास, अनुवादक–एम० आर० काले, मोतीलाल बनारसीदास, दिल्ली, द्वितीय संस्करण, 1967
2. रघुवंशम्–कालिदास, व्याख्याकार–डॉ० श्रीकृष्णमणि त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, चतुर्थ संस्करण, 1990
3. कुमारसंभवम्–कालिदास, संपादक–डॉ० गौतम पटेल, अहमदाबाद, 1986
4. मेघदूतम्–कालिदास, सम्पादक–डॉ० बिजेन्द्र कुमार शर्मा, साहित्य भण्डार, मेरठ, पंचम संस्करण, 1997
5. कालिदास और प्रकृति–डॉ० पुष्पा हजेला, विवेक पब्लिकेशंस, अलीगढ़, प्रथम संस्करण, 1987




# मनुस्मृति में प्रतिपादित पर्यावरण : एक पर्यालोचन

डॉ० तरुण कुमार शर्मा, इलाहाबाद

मानव के चारों ओर उसकी रक्षा के लिए एक आवरण बना हुआ है, जिसे प्रकृति या पर्यावरण कहा जाता है। इसके अन्तर्गत आकाशमण्डल, प्राणिजगत्, वनस्पति जगत्, जल-मण्डल एवं भूतल के रूप में जड़-चेतन या चराचर की गणना होती है। इनका सौम्य रूप मानव की रक्षा करता है तो रौद्ररूप उसके विनाश का मार्ग निर्मित करता है। कभी-कभी मानव अपनी सुख-सुविधा में अभिवृद्धि के लिए इनके प्राकृतिक रूप से छेड़छाड़ करके इन्हें विकृति की ओर ले जाता है तो ये स्वतः रौद्र रूप में आकर मानव को उसके कर्म का दण्ड देने लगते हैं। इनके स्वाभाविक रूप की व्यवस्था को हम मानव की पर्यावरण-चेतना कहते हैं।

भारतीय साहित्य प्राचीन काल से ही मानव की पर्यावरण-चेतना का अभिलेख रखता आया है। प्राचीन काल में जनसंख्या की कमी होने के कारण पर्यावरण की विकृति का संकट उतना नहीं था जितना आज हो रहा है, फिर मानव के पर्यावरण की रक्षा के प्रति हमारे ऋषिगण बहुत सावधान थे। यही कारण है कि प्रकृति के एक-एक उपादान के प्रति देवत्व-भावना हमारी प्राचीन संस्कृति का एक महत्त्वपूर्ण लक्षण रही है। यही नहीं, धर्मशास्त्रियों ने गृहस्थ के पाँच ऋणों में भूतऋण को भी गिना है जिसका अपाकरण वैश्वदेवबलि के द्वारा नित्यकर्म के रूप में निर्दिष्ट है। यह हमारी पर्यावरण-चेतना का एक अंग है, जिसमें परिवेश के रक्षक पशु-पक्षियों को यथेष्ट अन्न-जल से तृप्त करने का विधान हुआ था। पर्यावरण की रक्षा का यह धार्मिक प्रयास प्राचीन संस्कृति का शुभ लक्षण था।

धर्मग्रन्थों में मनुस्मृति के विभिन्न सन्दर्भ परिवेश के प्रति मानवीय जागरूकता का पुष्ट प्रमाण देते हैं। प्रथमाध्याय में पशु-पक्षियों तथा वनस्पतियों की सर्जना का निरूपण करते

